# यजुर्विधान शिक्षा

अथातो मन्त्राणामनुष्ठानकल्पनं वसिष्ठादिभिर्ब्रह्मर्षिभिरनुष्ठितमनुव्याख्यास्यामो नान्यद्ब्राह्मणस्य कदाचिद्धनार्जनक्रिया विद्यते होमानां यज्ञानां वैषाऽवश्यं क्रिया किन्सु मन्त्राहुतिवीर्यज्ञानं विद्याधनानां यजुर्वेदैरुपदिश्यते क एते मन्त्रा य एते मन्त्रा ऋग्यजुःसामाथर्वाङ्गिरस उभयात्मका मन्त्रा देवताभीष्टा वा परा द्रव्यसंस्कारकाञ्चेति य एते द्रव्यसंस्कारपरास्ते तत्रैवोपयोगिनो ये पुनर्द्देवताभिज्ञानाश्च फलं तेषां सर्वार्थत्वमभिसमन्धायाऽऽराधितानां च फलाऽऽदानऽआज्ञानसाधितानां फलदर्शनान्मन्त्रलिङ्गदर्शनाच्च विनियोगान्तरं वक्ष्यामस्तत्र कर्मकरणे तुलापुरुषचान्द्रायणकृच्छ्रातिकृच्छ्रादिभिः पूतशरीरेण कर्मापेक्षया द्वादशरात्रं षड्रात्रं तिरात्रमिति च कर्मणां कर्माङ्गानि कार्याणि सर्वमन्त्राणां पूर्वमेव लक्षणमयुतं सहस्रमिति च सिद्ध्यपेक्षया कार्याणि कर्मावसाने च फनावाप्तिर्ब्रह्मवारिणा भवितव्यं सरहस्ये कल्पाश्च सिद्धयो भावज्ञातव्याश्चेति १ अथ सर्वत्रोङ्कारपूर्वाभिर्महाव्याहृतिभिराज्याहुतिसहस्रं जुहुयात्सर्वदेवताऽऽराधने समर्थो भवति तेजस्वीभवत्यथ ययेष्टं कर्मकारणं समेताभिरौदुम्बरसमिधो जुहुयात्पश्वन्नकामो दधि पयो वा शान्तिकामोऽपामार्गस्तण्डुनानर्कसमिधो हिरण्यकामोऽन्नाद्यकामो जातीपुष्पाणां युग्मशो ग्रथितानामखण्डितानां घृताक्तानामयुतं जुहुयात्कामो मुष्टिभिस्तिलतन्दुलाञ्जुहुयाद्ग्रामकामोऽपामार्गकामः कर्कोटकान्वशीकर्त्तुकामोऽभिचारार्थं विषरुधिराक्ता गिरिमालुव्याधिघातकममिधो जुहुयाद्विषरुधिराक्ता विभीतकसमिधो जुहुयाद्राजा वश्यो भवति क्रोधान्वितो जनमरणे क्षये वा सर्वान्व्रीहीञ्जुहुयादुपशाम्यति दूर्वाब्रीहिभिर्यत्प्रतिकृत्ति-त्रयं जुहुयात्स राजा वशी स्यात्सर्वब्रीहिभिः प्ररूढैर्जुहुयाद्बहुशो भवन्ति दूर्वामायुष्कामः पुष्पाणि वसुकासो

वा सकुशाग्रं ब्रह्मवर्चसकामो भग्नतुवकण्टककाण्डान्प्रत्यङ्गिरे
काकोलूकपक्षहोमो विद्वेषणे चन्द्रग्रहे कपिलाघृतर्ठ०सहस्रसङ्ख्याताभिर्हुतर्ठ०
स्रुवेणैव वचामालोड्याऽसुनाऽभिमन्त्रितां कृत्वा पिबेत्परममेधावी भवति पुत्रकामो
मासमादित्याऽभिमुखः प्रतिदिनं पुरुषसूक्तमयुतं जपेत्पुत्रं ल्लभते
यद्यदिच्छेत्तदर्थमपि याज्ञिकद्रव्यं जुहुयात्तत्तदवश्यर्ठ०सम्पद्यते २
इत्यनादिष्टोऽयतहोमः । ओङ्कारपूर्विकया गायत्र्या च पृथग्युक्तानि सर्वाणि
कर्माणि कर्तव्यानि सर्वकामप्राप्त्यर्थोऽयं मन्त्रः सर्वफलसिद्धिदः
सर्वकामदैत्यनादेशेऽयुतहोमऽ ओङ्कारेण गायत्र्या पृथगुक्तानि कर्माणि भवन्ति
सर्वमन्त्रगणस्याऽप्येषविधिर्द्विषतो वधोऽसीत्यनेनैकादशाङ्गुलां लौहीं खादिरीं
वा सूचीं सहस्राभिमन्त्रितां कृत्वा शत्रुगृहे निखनेदुद्वसति भुवनं भुवनपतये
स्वाहेति मन्त्रत्रयस्य प्रतिमन्त्रं महाव्याहृतिवत्कर्म । सूर्य्यस्त्वेति परा रक्षा
प्रत्यङ्गिरं च कर्म । देवं वर्षयितुकाम उदुम्बरबिल्ववेतसवारणानां समिधो
दधिमधुघृताक्ताञ्जुहुयाद्यन्तु व्वयऽऽ इत्यावहशब्दश्च प्लुतः कार्यश्चक्षुष्पाऽ
इति स्वल्वनेन मन्त्रेणापहतचक्षुरुदके प्रविश्याहोरात्रं जपेदनपहतचक्षुर्भवति ३
उपप्प्रयन्तऽ इत्त्त्यनुवाकेन महानसाग्निमुपसमाधाय प्रत्यृचमन्नमन्वहं
जुहुयादन्नवान्भवति । तनूपाऽअग्ग्नेऽसीति रुजा ग्रस्तो दूर्वामयुतं जुहुयाद्रजा
मुच्यते । सन्त्वमग्नऽ इति नवभिरृग्भिर्गोष्ठे गा उपतिष्ठेत तावत्सङ्ख्या
भवन्ति गाव इहैवेति यान्धेनुमिच्छति तस्या एव पतितं गोमयं गृहीत्वा
दधिमधुवृताक्तं जुहुयात्तां धेनुंल्लभेद्मोघं कर्मेत्याचक्षते । महित्रीणामिति त्र्यृचं
पथिगच्छञ्जपेत्क्षेमेण गच्छति । मुप्प्रजाइति महाव्याहृतिवत्कर्माभिचारवर्जं
पुष्टिकर्मसु चैष ते रुद्द्रेति पूर्वार्द्धेन गवेधुकतण्डुलाञ्जुहुयाद्धनकामो वीरक्रमेण
शतपुष्पीं क्रीत्वा जुहुयात्तन्मूल्यर्ठ० शतगुणमुत्पद्यते द्वितीयार्द्धेन
मूषकशलभोत्पाते क्षेत्रमध्ये बलिं निवेदयेत्पिष्टपूरिकासुरामां
सादिभिरुपशाम्यति ४ द्विपदचतुष्पदानामुपसर्गे भेषजमसीति दधिमधुघृतं
जुहुयाच्छान्तिर्भवति त्र्यम्बकमित्यृचर्द्वेन शान्तिकामः पुष्तिकामो वा
धान्यव्रीहिसमिधो जुहुयात् त्र्यम्बकमिति कन्यानां सौभाग्यकामानां
पतिकामानां भगकामानां वा सर्वाभिस्त्रीभिराज्यहोमः पुरुषस्य

कन्याकामस्यानेनैव होमः कन्यानामग्रहणं कृत्तिवासा इति भयेषु जपेदभयं भवति जपेन सर्वोत्तरवादी भवति लोकश्च वचनविधेयो भवति त्र्यम्बकमित्यृगुभयेन धत्तूरकपुष्पाणां घृतप्लुतानां चतुष्पथे शून्यायतने वाऽग्निमुपसमाधाय शतसहस्रं जुहुयात्साक्षाद्भगवन्तं त्र्यम्बकं पशुपतिं दृष्ट्वैव तेनेत्युपतिष्ठते ह्युपस्थानान्तेऽभीष्टान्कामांल्लभतऽएतेनैव गुग्गुलधूपो दीपश्च नवनीतेनाथ भगवन्तः त्र्यम्बकं पश्यति चेत्सुवर्णरजतमिश्राणां भाजनानां सहस्रंल्लभते ५ आकूत्याऽद्दत्यष्टौ स्रुवाहुतीर्जुहुयाद्राजकुलेभ्यो भयन्न भवत्यन्वहं जुहुयात्कांस्यभाजनानां शतंल्लभते तिलाहुतीनामयुतं जुहुयाद्गोत्रे ह्यापदो न भवन्त्यकालेन कश्चिन्म्रियते। चिदसीति सहस्रं जपेत्सर्वोत्तरवादी भवति लोकश्च वचनविधेयो भवत्यग्नेस्तनूरिति व्रीहितण्डुलान्पयोऽयुतान्त्सहस्रं जुहुयात्सर्वातिथिर्भवति। युञ्जते मनऽ इति वैष्णवामुवाकं जप्त्वा सायंप्रातः प्रयुञ्जानो दीर्घायुर्भवति भयमन्यत्राऽपि न भवति। दिवो वा व्विष्णऽ इति महाव्याहृतिवत्कर्म्म। व्विष्णो रराटमित्ययुतं जप्त्वाऽष्टसहस्रं जुहुयात्पातालेऽपि भयन्न भवत्ययन्नोऽअग्निरैति रात्रौ शरीरमायुधञ्चात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविशेज्जयो भवति ६ इदमापः प्प्रवहतेत्यप्सु निमज्ज्य जपेदहोरात्रोषितो यावज्जीवकृतात्पापात्प्रमुच्यते। देवांशोऽ इति व्याधिघातकराजिकाभिरभिचारो युक्ष्वा हि केशनेत्युपश्रुतिरहोरात्रोषितो भूत्वोपश्रुतिं कुर्याज्जुहुयादग्ग्नऽ आयूंष्टग्ग्ने पवस्वेति ब्रह्मवर्च्चसकामस्याज्यहोमऽ उदुत्त्यमिति ब्रीहितण्डुलान्पयसा संय्युक्ताञ्छतसहस्रं जुहुयात्सर्वातिथिर्भवति। चित्रन्देवानामिति महाव्याहृतिवत्कर्म्म। विनऽ इन्द्रेति यस्म्मादधिको भवितुमिच्छन्ब्रह्मवर्च्चसेन विद्यया धनेन यशसा वा तस्य नामग्राहं जपेदधिको भवत्यनेनैवाज्याहुतीर्ज्जुहुयाद्दासमिथुनंल्लभते। व्विश्वकर्म्मन्हविषेति यामेव कन्यामिच्छति तस्यानामग्राहमायसीं सूचीं द्वादशाङ्गुलां सहस्राभिमन्त्रितां कृत्वा तस्याऽएव गृहद्वारे निखनेन्न म्रियते न चान्यस्मै प्रदीयते ७ प्राणायमऽ इत्यवकाशान्नित्यं जपेत्तेजस्वी भवति निरुजश्चाजिघ्रेति रुहस्रं धुक्ष्वाऽग्नौ समिधोदुम्बरगोमयहोमः पशव्यं शर्म्म गोमयेन गोः प्रकृतिं कृत्वा

देवसवितरित्यन्नभाग्भवति । व्याजस्येममिति । सप्तभिरृग्भिराज्याहुतिसहस्रं जुहुयाद्यज्ञादन्यत्र यज्जुहोति तच्च मूल्यं सहस्रं गुणमुत्पद्यते तदक्षय्यं भवत्यग्नेऽअच्छेति
सहस्रजिन्नाम्न्यदुम्बरयवतिलधान्यापामार्गतण्डुलाञ्जुहुयाद्वनकामो वीरक्रयेण शतपुष्पीं क्रीत्वा जुहुयात्तन्मूल्यसहस्रगुणमुत्पद्यते । उदुम्बरसमिधमयुतं जुहुयात्सुवर्णमुत्पद्यते । गोरोचनामष्टसहस्राभिमन्त्रितां कृत्वा ललाटे तिलकं कुर्यात्सर्वजनप्रियो भवति । सोमर्ठ० सोमयाजी भवति । प्रनो यच्छत्वित्यन्नकामो होमद्रव्याणि
जुहुयादयुतमर्य्यमणमित्यादित्याभिमुखः प्रतिदिनं काममभिसन्धाय जपेत्क्षिप्रमेव लभते ८ एष ते निरृतऽ इति मांसङ्गृहीत्वा जम्बुकास्थि वा शूर्पेन्यस्य चतुष्पथेऽहोरात्रोषितः शिरसि सहस्राभिमन्त्रितं कृत्वा क्षिप्रं क्षिप्त्वाऽप्रेक्षमाणो गच्छेद्यावत्त्रीतं तावदष्टगुणं भवत्यनेनैव तुषकण्टकहोमो गृहान्नैरृतस्थानं गत्वाऽभिचारेण होमविधानेनाग्निमुपसमाधाय शतसहस्रं जुहुयाच्छत्रुकुलमुद्धरति विषरुधिराक्तैर्ग्राममुद्धरति राजानं नगरं व्वोत्मादयितुकामो वैकङ्कतकण्टकानां तीक्ष्णतैलाक्तानां विषरुधिरेण कटुतैलाक्तानां समृद्धद्विगुणर्ठ० शतसहस्रं जुहुयाद्धोमान्ते नदीं प्रस्रवणं वा गत्त्वा कपिलागोमयेन लिङ्गं प्रतिष्ठाप्य पञ्चगव्येन स्नापयेद्रुद्राध्यायं जप्त्वा गुह्यकैः कर्त्तुं गीतिर्भवति ह्यमोघं कर्मेत्याचक्षते ९ देवस्यत्वेत्यभिचर्यमाणः स्रुवेणापामार्गतण्डुलाञ्जुहुयात्स्रुवं च तस्मिन्देगऽआगमने च प्रतिमन्त्रमेते च प्रत्यङ्गिरोऽपो देवाऽ इति देवं वर्षयितुकामऽ
औदुम्बरबिल्ववेतसवारणान्दधिमधुघृताक्ताञ्जुहुयात्प्रजापते न त्वदिति महाव्याहृतिवत्कर्म्म । रुद्द्र यत्तऽ इति पालाशसमिधो जुहुयात्सार्णमुत्पद्यते पायसं
जुहुयाद्घृतमधुमिश्रमर्थपदमेवापामार्गोदुम्बरवारणानाममावास्यायामेतत्कर्म १० हर्ठ०सः शुचिषदिति विरजो मन्त्रो नाभिमात्रमुदकमवतीर्यादित्याभिमुखः शतसहस्रं जपेदुपपातकेभ्यो मुच्यते द्विगुणेन महापातकीभ्यश्चतुष्कृत्वा सर्वान्वेदानवाप्नोति । चत्वारि शृङ्गेत्यार्षभो मन्त्रः सकृदभ्यसनादेवपूज्यो

भवति द्रुपदादिवेति त्रिरन्तर्जले जपेदहोरात्रोषितो विपापोभवत्यथ
महापातकसंय्युक्तः पञ्चगव्याहारो गोष्ठेऽग्निमुपसमाधाय
गोमयेनान्युलिप्ताङ्गोऽयुतंजप्त्वाऽष्टसहस्रं जुहुयाद्विपापो भवत्युद्वयमिति
पापप्रणाशिन्यादित्योपस्थानं कुर्यात्पापन्नाशयत्यादित्यस्य
सायुज्यमतोयादुदुत्त्यं चित्रन्तच्चक्षुरित्याभिमुखो जपेदनेनाहोरापकृतं
दुष्कृतमपहरति देवा यज्ञमिति ब्राह्मणानुवाकं जप्त्वा ब्रह्मलोके महीयते ।
सुरावन्तमिति चतुरृचेन पौर्णमास्यां संव्वत्सरठ॰ सोममुपतिष्ठेत
ब्राह्मणायाग्रन्दत्त्वा भुञ्जीत क्षिप्रठ॰ सोमयाजी भवत्यश्चिनार्भैषज्येनेति
देवताऽभिषेकं कुर्य्यादयद्देवाऽ इतिच्यृचं कूष्म्माण्डठ॰ हिरण्यगर्ब्भो यः प्प्राणतो
ब्रह्म यज्ञानं महीद्यौरुपश्श्वासयाग्ग्नेनय याते घर्म्मे यमाय स्वाहेत्यष्टर्चं
जप्त्वा सुरापानाद्ब्रह्महत्त्यायाः प्प्रमुच्यते । पितृब्भ्यः स्वधायिब्भ्यऽ
इत्यनुवाकशेषेणोत्तरेणानुवाकेन पितृणामक्षय्यतृप्तिर्भवति
व्वसन्तेनऽऋतुनेत्याज्याहुतिसहस्रं जुहुयात्सविता वरदो भवति ११
इति यजुर्विधानशिक्षायां प्रथमोऽध्यायः

शिवो भवेत्यग्न्युत्पाते सर्वव्रीहिरसवतीः समिधः सहस्रं जुहुयादुपशमयति
ह्न्नाऽऽ इत्यौदुम्बरसमिधो जुहुयाद्धनकामः परस्याऽ इति वैकङ्कतीर्जुहुयाद्रक्षणे
परमस्याऽ इत्यौदुम्बरीर्जुहुयादर्थसिद्धये । याः सेनाऽ इति दुग्धमानीय क्षितौ
जुहुयाद्दस्युभयन्न भवति प्रतिकृतिं जुहुयाद्रक्षायैदंष्ट्राब्भ्यामित्युग्रभयं जप्त्वा
सर्वभयं नश्यति कुशकण्टकहोमो द्विषत्मोहनाय व्यवहारेष्वन्नपतऽ इत्यन्नं
जुहुयादन्नमुत्पद्यते सर्वोपकरणमिश्राणामन्नाद्याहुतीनां त्रिकटुकेनाभ्यज्य
चतुष्पथे शृन्यायतनेऽग्ग्निमुपप्तमाधाय सहस्रं जुहुयाद्ग्राम्या
व्रीहयोऽच्य्याभवति १ सुपर्ण्णोर्ण्णोऽसीत्यृगुभयस्य महाव्याहृतिवत्कर्म नमः
सुतऽ इति निगडबद्धो व्यसन्स्थो वा जपे न्निगडान्मन्यते । नमो भूत्याऽ इति
वीक्रमेण शतपुष्पीं क्रीत्वा जुहुयाच्छतशो मूल्यमुत्पद्यते । कामङ्कामदुघऽ इति
कामधुङ्नाम्न्या चतुष्पथेऽहोरात्रोषितः करीषतप्तायां भूमौ सहस्रं घृतम्मांसेन
जुहुयाद्ग्रामंल्लभेदथ वा सुवर्णशतं गोशफेनाज्याहुतिसहस्रं
जुहुयाद्गोकामोऽन्यच्च महाव्याहृतिवत्त्कर्म्म । सजूरब्दऽ इत्याज्याहुतिसहस्रं

जुहुयाद्गोकामः २ याऽओषधीरित्यनुवाकेन वचामालोड्याभिमन्त्र्यारोपणं कृत्वेन्दुग्रहे शुद्धामुत्पाद्य त्रिरात्रोषितस्ताम्रभाजने संस्थाप्य कपिलाष्टतेनालोड्य पञ्चदशधाऽभिमन्त्र्य चन्द्रं दृष्ट्वा पिबेत्पयसा मासं भुत्क्का श्रुतिधरो भवति याऽओषधीरिति द्वाभ्यामोषधीरभिमन्त्र्य पाययेदगदो भवति । शतंव्वऽ इत्याम्रसमित्पर्णफलानि जुहुयादारोग्यकामऽ आयुष्मान्भवत्योषधीः प्रतिमोदद्व्वमिति बीजवापनं कुर्यान्निष्पन्नसस्यो भवत्योषधीरितीति मातृनाम्न्योदुम्बरतिलयवापामार्गहोमो गोहिरण्यकामोऽश्श्वत्थे वऽ इत्यश्श्वत्थ ममित्पर्ण्णहोमो गोधनकामः पुरुषनाम्नी चैषा यत्रौषधीः समग्मतेति रक्षोघ्नी यज्ञेऽन्यत्रापिराक्षसपिशाचडाकिन्यादिभीतस्याज्यहोमोऽश्श्वावतीरित्यरिष्टनाम्न्या शान्त्यर्थे पयोऽन्नं व्रीहींश्च जुहुयादुच्छुमम्माऽ इति बन्धनस्थो जपेन्मुच्यतेऽ इष्कृतिरित्यात्मनिष्कृत्यर्थे होमोऽति विश्श्वाऽ इत्यात्मशरीरे पावनाय जपहोमौ रक्षणाय च यदिमाऽ इति व्रीहि होमोऽघनाशाय धान्यप्रतिकृतिनाऽभिचारे वशीकरणे च यस्यौषधीरिति स सर्पनाम्न्याऽत्मपावनाय च यवहोमोऽभिचारे साकंय्यक्ष्मेति यस्मिन्काष्ठे च ष उपविशेत्तदादायाष्टशतसहस्रमभिमन्त्र्य शत्रुगृहे निखनेदुद्वमति शत्रुगृहं क्षिप्रं पदे निखनेत्कुष्ठी भवति चाषपत्त्रेण सहस्राभिमन्त्रितेन गृध्रपत्त्रेण वा प्रतिकृतौ मर्मसु विद्धो म्रियतेऽअन्यावऽ इति वचो नाम्न्याऽऽरोग्यकामो हस्तेनान्नं गृहीत्वा भुत्क्का रोगात्प्रमुच्यतेऽस्या ऋगक्षरसङ्ख्यायाऽष्टसहस्राभिमन्त्रितां ब्राह्मीं वचां वा प्राश्नीयात्परममेधावी भवति तथा च चत्वारो वर्णा वश्या भवन्ति याः फलिनीरिति द्वाभ्यां सर्वौषधीमिश्रेणोदकेन सहस्राभिमन्त्रितेनात्मानं स्नापयेद्यावज्जोवकृतात्पापात्प्रमुच्यते ३ मुञ्चन्तु मेति रहस्यो मन्त्रः सर्योपद्रवनाशनऽआतुरमालभ्याष्टसहस्रं स्तिष्ठञ्जपेत्सर्वोपद्रवाञ्छमयति शत्रुभये चर्य्यमाणः करम्भाहुतीनां रक्षणाय तानि द्रव्याणि जुहुयाद्यावज्जीवमन्नान्यक्षय्याणि भवन्ति याऽओषधीरित्यृगुभयेनौषधीमूलमुद्धरेत्कर्णे निधाय सर्वजनप्रियो भवति । याश्च्चेदमिति राजिकाभिः प्रतिकृतिं

कृत्वाऽभिचरद्रव्यहोमोऽभिचारजपहोमश्चानेनैव पालाशपत्त्रजालपाशग्रथितात्स न लोष्ठप्रक्षेपऽआत्मरक्षा शिखाबन्धश्चेति नाशयित्त्रो बलासस्येति तुषलवणभस्ममिश्राणामन्नाद्याहुतीनां त्रिकटुकेनाभ्यज्य चतुष्पथे शून्यायतने वाऽग्निमुपसाधाय शतसहस्रं जुहुयात्कृष्णाष्टम्यामारभ्य यावत्कृष्णचतुर्द्दशीन्तावदुत्सादनं रात्रौ रुङ्गृहयारिर्णिधनमुपयाति मा वऽ इत्यनेनातुरमियाद्द्वेष्यशान्तिकरणे पयोऽन्नम्ब्रीहीन्वा जुहुयादोषधयः समिति सार्वकामिकया महाव्याहृतिवत्कर्म त्वाङ्गन्धवोऽ इति पापरोगमोचनाय होमः सहस्व मऽ इत्यादिवशीकरणेपयोऽन्नं ब्रीहीन्वा जुहुयात् ४ मा मा हिर्ठ०सीदित्यभिचर्य्यमाणऽआज्यं जुहुयाच्छान्तिर्भवत्यब्भ्यावर्त्तस्वेति वत्म्र्म कवपामादायायुतं तिलतन्दुलाञ्जुहुयात्क्षेत्रं च जातसस्यंल्लभते दधि मधुघृतं जुहुयाद्ग्रामंल्लभतेऽग्ने तवेत्यन्नं जुहुयाद्वृद्धिर्भवति इष्क्कर्त्तारमिति अम्धुन्तवणहोमः स्त्रीपुरुषाणां सौभाग्यकामः स्त्र पुरुषयोरनिच्छतो दधिमधुघृतं जुहुयात्प्रोतिर्भवत्यृतावानमिति व्रती भूत्वा ष्टमहस्रमाज्याहुतीर्जुहुयात्सिद्धवाग्भवत्त्याते वत्सऽ इति तथैव कुर्याद्धनविद्य बत्वनकामस्तुभ्यन्ताऽअग्निः प्प्रियेषु स्वस्तिनऽ इति त्रिभिः पलाशसमिधां दधिमघुघृष्टाक्तानामयुतं जुहुयात्कार्षापणानां सहस्रमुत्पदाते सिद्धेशत ५ प्रातर्द्दिने दिने द्रप्सऽैति दधिशरमयतहोमः पशुपुष्टिकामस्य च नमोऽस्त्विति घृतपायसं नागस्थाने जुहुयात्सुवर्णमुत्पद्यते याऽ इषवऽ इति विलेप्रविष्टर्ठ० सर्पग्दृष्ट्वा तत्रैवाज्याहुतिसहस्रं जुहुयात्सुवर्णशतद्वद्यमुत्पद्यते सिद्धे तदर्द्धं नष्टे सुवर्णममोघं कर्मेत्याचक्षते कोटरावस्थितस्याप्येवं विधिरिष्यते कृणुष्व पाजऽ इति प्रत्यङ्गिरे जपेदुदग्नऽ इति शत्त्रोर्नामग्राहे तुषकण्टकराजिकामर्षपाणां विषरुधिराक्तानां जुहुवादन्त वश्यो भवति शत्रोः क्रुद्धस्य जपेत्तुषकण्टकणसर्षपान्वा जुहुयाद्वशीकरणम् ६ काण्डात्काण्डदिति द्वाभ्यां दूर्वाप्रवालानामयुतं जुहुयाद्ग्रामे जननमरणमुपशाम्यति द्विगुणेन नगरे त्रिगुणेन देशे मधुमान्नऽ इत्यष्टौदुम्बरीञ्जुहुयाद्धनकामोऽपाङ्गम्मन्निति देववर्षयितुं कामऽ उदुम्बरविल्ववेतमवारणानां पूर्ववद्दधिमधुघृताक्तानामयुतं जुहुयान्महावृष्टिर्भवति यवमुष्टिसहस्रं जुहुयादप्रतिहतवाक्यो भवत्यग्ने

जातानित्यचोभयेन महाव्याहृतिवत्कर्म हितोयोत्तरार्द्धर्चमयम्पुरऽ
इत्यनेनानुवाकेन पद्मे वा व्याहृतं कर्मेत्याचक्षतेऽथ
वशीकर्तुमिच्छन्पलाशाश्वत्त्यापामार्गबिल्ववेतसमावांसकशाखोदक-
समिधोदधिमधुघ्रतोक्ताञ्जुहुयात्सर्वे वर्णा वश्या भवन्ति ४ अथ राज्यकामः
पद्मकुमुदमौगन्धिकोत्पलादीनि भगवतो महेश्वरस्योभयतश्चन्दनाक्तानि
शिरसि शतसहस्रमारोपयेत्सहस्राक्षस्य श्रीरुपेयाद्धाद्भ्रातृयात्पुरुषाद्धोराद्वा
विरुध्येन त्रिगुणेन साक्षादुपतिष्ठतेऽपत्यमित्राणां वेति
अश्वत्थराजवृक्षसमिधामप्येष एव विधिर्देवस्य दक्षिणायां मूर्तौ सघृतं
गुग्गुलमष्टसहस्रं जुहुयात्षट्सहस्राणि वा न व्याहृतं कर्मेत्याचक्षते यथा सिद्धे
महानसेऽग्नावष्टसहस्रं जुहुयादद्र्व्वमव्यवछिन्नमक्षय्यं भवति । मा मो
महान्तमिति तित्वाहुतोनामयुतं मुहुयाद्गृहे बालानां परिजनस्यारोग्यं भवति मा
नस्तोक्या पृथगुक्तानि कर्माणि भवन्ति ५ नमो हिरण्यबाहव इति षड्भिरनुवाकैः
कटुतैलाक्तान् राजसर्षपाञ्जुहुयाच्छत्रुमुत्सादयति फट्कारेण देवस्योपरि
मालायामधः शिरसमवलंत्र्य शस्त्रेण शिरसि रुधिरठ० स्राव्य
स्नापयेत्त्रिकटुकेनाभ्यज्य देवं कराङ्गुलिनखेनोत्पाट्य शत्रोर्नाम स्मरञ्जपेत्
सर्वबलठ० शत्रुसुत्सादयेदेवं कृत्स्नं ग्रामनगरं वैकान्हा राजानमहोरात्रेण
ब्राह्मणमर्द्धेन क्षत्रियं त्रिभागेन वैश्यठ० षड्भागेन शूद्रठ० स्त्रियं वा व्याहृतं
कर्मेत्याचक्षते ६ अथ
वशीकतुमिच्छन्पालाशाश्वत्थापामार्गवैकंकतविल्ववेतसोशीरादीन्प्रतिवर्णं
प्रतिमन्त्रं दधिमधुघृतक्षाराक्तानामयुतं जुहुयात्क्रमशो वर्णचतुष्टयं
वशमानयत्यथ राज्यकामः कुमुदसौगन्धिकनीलोत्पन्नादीन्
पूर्वकल्पेनारोपयेत्साक्षाच्छ्रीभगवती तूपतिष्ठते नमः सिकत्यायेति
कलशमभिमन्त्र्याष्टशतेन राजानं स्नापयेत्सर्वविनायकेभ्यो भयं न भवति
रोगाभिभूतं स्नपयेन्मुच्यते सर्परागैर्नसो षः किंरिकेभ्य इति तिलाहुतीनामयुतं
जुहुयात्कार्षापणानां सहस्रमुत्पद्यतेऽपामार्गसमिद्भिः सुवर्णग्गुगुलप्रतिमानां
क्षुरेणोत्कृत्याष्टसहस्रं जुहुयादलङ्कृतां कंन्यां लभतेऽथ वा सुवर्णशतं गोशफेनैका
दशसहस्रमाज्य होमात्तावत्यो गावः स्युस्तिलतन्दुलानाठं शतसहस्रेण

सर्वसमृद्धस्य तिलयवधान्यशतपुष्पअयीं प्रतिकृतिं कृत्वा जुहुयाद्राजमान्यवश्यौस्यातामुत्पलपद्मानार्ठ॰ शतसहस्रेण स्वरूपिणी राजलक्ष्मीर्भवति चणकमितानां गुग्गुलुगुटिकनार्ठ॰ शतसहस्रं जुहुयात्स्फीतसाप्नन्तराजो प्राप्नोति देवस्य दक्षिणायां मूर्तौ बिल्वतमिद्भिर्महाराज्यं महाचतुष्पथे वल्मीकमृदा गोमयेन लिङ्गं प्रतिष्ठाप्य रूद्राध्यायेनाभिमंत्र्याष्टतया पायसमन्वहं वलिमुपहरेद्भूतेभ्यो भूतिकामो देवस्य दक्षिणस्यां मूर्तौ वचाफलमर्द्धं वा सूक्ष्मं पिष्ट्वा ताम्रभागने न्युप्यकपिलघृतेनालोड्य प्रादेशिन्याष्टप्तहस्रमभिमन्त्र्य पिबेदप्रतिहतवासः स्याद्वाक्सिद्धिश्चौदुम्बरसमिद्भिर्द्दध्यक्ताभिर्महागोस्वामी स्यान्न च गावः क्षोयन्ते विल्वफलैर्घृताक्तैः सुवर्णमसिद्धे रजतमेतेनैवौदुम्बरामलकौ हरीतकिविभीतकाव्यारव्वाताः ७ अन्तर्धानमिच्छन्पर्वत् शिखरामारुह्य कणभुवस्रातान्जनं सहस्रमभिमन्त्र्य देवस्य हस्ते निवेद्य तावज्जपेद्यावद्धूमायते पूर्णे शतसहस्रे ब्रह्मघ्नस्यापि ज्ज्वलत्यूपायमाणे सर्वलोकवशीकरणं धूमापमाने पादप्रसारित्वं ज्वलिते चाकाशगामित्वर्ठ॰ रुद्ररूपो शशांकप्रभः मसुद्रान्तां पृथिवीं पर्यटेद्रुद्रस्यानुचरो भवति पद्मपुष्पाणां सुरभिचन्दनाक्तानां घृतपूर्णाक्तानां वा चतुष्पथे शून्यायतने वाऽग्निमुपसामाधाय शतसहस्रं जुहुयात्स्वयमेव श्रीरुपतिष्ठतेऽनेन यथेच्छति तथा करोति द्रापेऽअन्धसऽ इत्याज्यं जुहुयाद्वासां स्यक्षयाणि भवन्ति ८ इमा रुद्रायेति तिलाञ्जुहुयादयुतमयाचितं धनं स्यान्महारोगोपवाते दूर्वाप्रवालैर्गतायुर्द्दीर्घायुर्भवत्यऽथ जनशानि पुष्टिकामो दधिमधुघृतपायसं जुहुयान्महाग्रहभूतपिशाचादिभ्यो मोक्षयति वैकङ्कतपलाशसमिद्भिर्घृताक्ताभिरयुतं जुहुयादाभिचारिकभयं न स्यान्महाजनेनाभिभूयमानस्तुषां जुहुयाच्छाल्मलीवैवङ्कत्यौदुम्बरो यवतिलानां चायुतं जुहुयाद्वश्ये गवामुपघाते गोष्ठमध्यऽग्निमुपसमाधाय वैकङ्कतसमिधो जुहुयाच्छान्तिर्भवति यावन्तश्चतुष्पदास्तेषामेष विधिर्जनमरणे क्षये वाऽयुतं तिलाञ्जुहुयाद्गृहग्रामनगरमध्येऽग्निमुपसमाधाय सुप्तजनेषु चतसृषु दिक्षु देववलीन्दत्वा वलिभीरक्षितः कर्म

कुर्यादोदनघृततिलपिष्टमाषान्नपरमान्नकृशरादीनि
देववलिमुपहरेत्सर्वत्क्तापुष्पाणार्ठ० रक्तचदनाक्तानां घृतपूर्णानां चतुष्पथे
शून्यायतने वाऽग्निमुपसमाधाय शतसहस्रं जुहुयादुर्वशीप्रतिमा कन्यालभतेऽथ
वा सुवर्णशतमयमग्निः सहस्रिणऽ इति महा व्याहृतिवत्कर्म गवार्ठ० शांतिर्भवति
गोशफेनाज्याहुतिसहस्रं जुहुयाद्गेशतं लभेदनेनैव समिद्धोमो हिरण्यपशुकामस्य
सहस्रस्येति महाव्य हृतिवत्कर्म महाव्याहृतिवत्कर्म ९
इति यजुर्विधाने द्वितीयोऽध्यायः २

नमस्तऽ इति चतसृभिः प्रत्यृचं
यवगोधूमगवेधुकजार्तिलान्वा दधिमघुष्टताक्तानेकाहं जुहुयाद्धान्यं बहु
भवत्येकादशरात्रेण जनमरणमुपशाम्यति पञ्च शरात्रेण वा राष्ट्रोपद्रवंव्विर्ठ०
शतिरात्रेण देशोपद्रवं मासेन पृथिव्युत्पातं गवामुत्पाते गोष्ठेऽग्निमुपसमाधाय
वैङ्कन्तसमिधामयुतं जुहुयाच्छान्तिर्भवति द्विगुणेन महाशान्तिर्भवति १
अध्यवाचदिति सर्वत्र रक्षः कर्त्तव्या उ गेभ्यश्च सर्षपान्तसप्तभिर्मन्त्रितान्कृत्वा
चतुर्दिक्षु क्षिपेत्सर्वत्र रक्षा कृता भवति पथि गच्छन्जपेत्क्षेमेण गच्छति
सर्षपैर्ब्रह्मराक्षसभूतप्रेपिशाचादिभ्यो मोक्षयति तै सर्षपैः स्कन्दग्रहादिभ्यः
शिखोपरिजप्याभितो विहाय रात्रौ स्वपेद्रोगभयं न
भवेत्सर्वरोगशमनायौषधमभिमन्त्र्य प्राशयेदुदकेन सर्वसत्वानार्ठ० सर्षपैः सर्पाणां
भस्मना सर्वभूतानां स्तनमण्डलबन्धादग्निहोमेन लोहेन विशलर्ठ०
सहस्रमभिमन्त्र्य नागहृदि क्षिपेत्सकुलवान्धवो नागो नाशं गच्छति तालशब्देन
भस्मनाऽतीवस्तम्भोत्सादनं करोति २ असौ च
इत्यृग्द्वयेनाहोरात्रयोरादित्यमुपस्थायाक्षय्यमन्नं भवति एवं दधिदुग्यष्टतेन
स्नापयेद्रोगान्मुच्यते सविता प्रसन्नो भवति वर्षति वाऽतसीपुष्पाणामयुतं
जुहुवादवश्यो वश्यो भवति सवितो वरदो भवत्युदकसक्त्वाहारो वेतससमिधां
गुडक्षीराक्तनामयुतं जुहुयाद्गगवानादित्यो महावृष्टिं प्रमुञ्चति नमोऽस्त्विति
घृतपायसर्ठ० स्थण्डिलमुपलिप्यार्कप्रस्तरपद्मपस्तरे वा कृष्णाष्टम्यामारभ्य
यावत्कृष्णचतुर्द्दशीं सहस्राभिमन्त्रितं कृत्वा निवेदयेत्कार्षापणानां सहस्रमुत्पद्यते
सिद्धे शतम् ३ प्रमुञ्चेति षड्भिरायुधान्यभिमन्त्र्य सङ्ग्रामोपनीताः शत्रवः

पलायन्ते न चाभिमुखास्तिष्ठन्ति दर्भकण्टकानामयुतं
जुहुयादनामिकाङ्गुलिनखेनोत्पाट्य शत्रोर्नाम स्मरञ्जपेत्सबलर्ठ॰
शत्रुमुत्सादयेद्ग्रामं नगरं वैकेनान्हा राजानं प्रभूतशस्त्रवन्तं क्षत्रियं
दिवसत्रिभागेन चतुर्थेन वैश्यं षड्भागेन शूद्रर्ठ॰ स्त्रियं रक्षोभूतेभ्यो रूद्रेभ्यः
पलाशपुटेष्वेवमर्द्धमासेन जनमरणमुपसंयतीछन्तेनमुन्यन्नैः शान्तिषु ययोक्तेन
वशीकरणमभिचारश्च शान्तिर्भवति ९ या ते रुद्रेति जीवोर्णायाः प्रतिसरर्ठ॰
सहस्राभिमन्त्रितमेकादशग्रन्थियुतं बालानां गुर्विणीनां च हस्ते बध्वा ताश्च
सुखेन वर्द्धते धनिकधारणिकेभ्यो भयं न भवति परि नऽ इति
वटप्ररोहसमिधोऽयुतं जुहुयादायुष्मन्तः पुत्राऽ उत्पद्यन्ते मीठुष्टमेति महाभये
चोरभयेऽग्निभये प्राणसर्ठ॰शये सङ्कटे वा मनसा जपेत्क्षेमेणागच्छत्यायाति च
विकिन्द्रेति महाजनविरोधे राजा वा प्रत्यनीकपरिक्षतः सर्वव्रीहीञ्जुहुयात्सर्वे
भग्नमनसः शत्रवः पलायन्ते सहस्राणीति महाजजनमरणे राजोपद्रवे वा
शाल्मलिविकङ्कत्यौदुम्बरसमिधो यवतिलान्वैकादशकृत्वोऽभिमन्त्र्य शतसहस्रं
जुहुयात्कृशरापायसेन भूतेभ्यश्चेद्विडालमांसेन राक्षसान्मुच्यतेऽसङ्ख्यानीति
रक्तवासा रक्तोष्णी रक्तमाल्यानुलेपनो देवमभ्यर्च्य श्मशाने एकवृक्षे
नदीपुलिने चतुष्पथेऽरण्ये
वैकादशशरानर्कमूलपरिवेष्टितान्महाजातैलाक्ताञ्छमशानाग्नौ प्रदीप्ते
प्रक्षिपेद्दशर्चेनैकादशाभिमन्त्रितेन तद्भसूना शत्रोः प्रतिकृतिं कृत्वोरसि
कटुतैलेनाभ्यज्य दक्षिणभूभागेऽवस्थाप्य एकैकेन सहस्राभिमन्त्रितेन
शरेणैकादशसु प्राणायतनेषु विध्येदासहस्रयोजनगतर्ठ॰ शक्रलोकगतं वा
शत्रुमुत्साद्वयेद्देवासुरयक्षगन्धर्वरक्षोभूतपिशाचादौ शान्त्यर्थं देवं घृतक्षीरेण
स्नापयेद्रुद्राध्यायेनाभिमन्त्र्य मा न स्तोक इति वा घृतमधुपायसमयुतं
जुहुयादधोदेशमधिष्ठाप्य कर्पटगृहादिषु मध्यतऽएषऽएव विधिरुत्पादने
फट्कारेण सर्वकर्माणि कारयेत् १० नमोऽस्तु त्रिकेण मध्याह्ने
तुषकण्टकाञ्जुहुयात्सर्षपान्वाऽहरहर्महाप्रत्यङ्गिरेऽष्टौ देवयोनयः
सपिशाचाश्चरन्ति निशाचराः शृण्वन्ति ये यातुधानास्ते सर्वे सशूलहस्तऽ
उपतिष्ठते यदुच्यते तत्करोति अथ वा ग्राममुत्सादयति ११ अथ वा

कृत्यामुपादयितुं कामो रक्तवासा रक्तोष्णीषो रक्तमाल्यानुलेपनो देवमभ्यचर्य श्मशानाङ्गारेषु लोहकीलान्प्रादेशमात्रान्महातैलाक्तानाच्छतसहस्रं जुहुयादुत्तिष्ठतिरक्ताङ्गीरक्तनेत्रोर्द्ध्वकेशीकृत्या तां क्षिप्रमेव रुधिरमांसेन पूर्णपात्रेण तर्पयेदन्यथा कर्त्तारमेव हिनस्ति सा त्वरितापितेति नामकटूतिकान्वधिष्यामीति वक्तव्यामुकं व्यापादयस्येति सा तूर्णं वधमुत्पादयति यामाज्ञापयति त्रैलोक्यावस्थितमप्युत्त्सादयत्यथ वैकैकस्य शारीरस्य ग्रामे गृहे न गरे वा व्याहृतं कर्मेत्याचक्षतेऽथ प्रयोगः शाकयावकपयोभक्षो द्वादशरात्रमुपोष्य लघुभ्यो लघूनि गुरुभ्यो गुरूणि सहस्रेषु महितेषु महान्ति तुलापुरुषचान्द्रायणमध्यतऽएषऽएव विधिः कल्पग्रहणोत्वाचार्यमभिवाद्यावलम्ब्य पठेन्न चैवान्यथा पठेदिति न चैवान्यथा पठेदिति १२

इति यजुर्विधाने तृतीयोऽध्यायः ३

परस्यात्मरुजर्ढ० सङ्कामयितुमिछन्कर्तुं शिलां कृत्वा कुम्भतोदकपूर्णेन सहस्राभिमन्त्रितेनात्मानं ठ० स्नापयेदश्मन्नूर्ज्जमिति प्रदक्षिणं परिहृत्य कुम्भे शिलां कृत्वा शत्रोर्नामग्राहं यं द्विष्मऽ इति निरस्येत्कुले सर्वरुजस्तस्य सङ्क्रामन्ति विश्वतश्चक्षुरिति महाव्याहृतिवत्कर्म देवस्य दक्षिणायां मूर्तौ मधुघृतपायसाक्तानां पद्मानार्ढ० सहस्रं जुहुयात्स्थण्डिलमुपलिप्यार्कप्रस्तरे कृष्णाष्टमीमारभ्य यावत्कृष्णचतुर्द्दशीं सप्ताहं सुवर्णं लभते यो नः पितेति महात्र्याहृतिवत्कर्म १ आशुः शिशान् ऽैत्यनुवाकेनाप्रतिरथेन रथमायुधमात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविशेज्जयो भवति चौरमहिषव्याघ्रसिर्ठ० हराक्षससर्पादिभयेषु मनसा जपेत्क्षेमं भवति यमिछेत्स्तम्भयितुं तमनेन स्तंभयेदुदेनमित्युदुम्बरसमिदाज्ज्यहोमः प्रजापशुपुष्ट्यर्थे सूर्याश्मिरित्यर्कसमिद्भिः सुवर्णमुत्पद्यते विमानऽ इति द्वयोर्महाव्याहृतिवत्कर्म्म मध्यन्दिने समुद्रगां नदीं गत्वा द्वीपमध्येऽग्निमुपसमाधाय घताक्तानां कृष्णतिलानार्ढ० शतसहस्रं जुहुयाद्विमानैश्चन्द्रवर्णैः समारुढाः सर्वालङ्कारभूषिताः सपरिच्छदाश्चाप्सरसऽआगच्छन्ति तत्र सर्वालङ्करणानि वासांसि मुत्का

विवाससः स्वानि गुह्यायतनानि दर्शयन्तो जले क्रीडन्ति यदि तानि दृष्ट्वेन्द्रियविकारो भवेद्देवपदं ददति तदा तस्मै अथ दृढव्रतोऽग्रे महानीक्षमाणस्तावज्जपेद्यावदुदकमुत्तीर्य वासार्ढ॰सि परिधाय यावन्ति दिव्यैः सुगन्धिचन्दनैरङ्गानि विलेपयन्ति पाणौ गृहीत्वा विमाने समारोपयन्ति तासां सर्वाधिपतिर्भवति ताभिः सह लोकं गच्छति यं भोजं कामयते तं कुरुते मध्यन्दिने चोदुम्बरतिलैर्यवधान्यापामार्गहोमः सोऽर्थप्रदानाय देवकन्यां पश्यति कन्याऽ इवेत्यर्धं दद्यादनेनैव विधिना महाव्याहृतिवत्कर्म प्रतिदिवसमित्याज्याहुतिसहस्रं जुहुयात्प्राचीमनुप्रदिशमित्याज्य सहस्रं जुहुयाद्द्विपदचतुष्पदकामोऽग्नेसहस्राक्षेति सहस्रनाम्नाष्टयगुक्तानि कर्माणि भवन्ति २ तां सवितुरिति सहस्रधारया गोमयर्ढ सहस्राभिमन्त्रितं कृत्वा संल्लिप्तशरीरस्नायाद्यावज्जीवमस्य गावो न क्षीयन्ते दुह्यमानायास्तस्या नाम गृहीत्वा परिवेषणे कृत्वोदकमवतीर्य तावज्जपेद्यावन्मुक्तो धेनुं लभते शमीसमिधो जुहुयाद्वृष्टभादिकर्ठ॰ शतं लभतेऽथ वा गोशफेनाज्यं जुहुयाद्गोशतं लभेदेतेनैव हस्त्यश्वमच्चिषाजाविका व्याख्याताः घृतदुग्धाहुतीनां वारणेन स्रुवेणाष्टसहस्रं जुहुयाद्धोमान्ते दशमहिषीर्लभते विधेमतऽ इति वैकङ्कतीभिः सर्वसमृद्धः स्पात्प्रेद्ध इति दध्यौदुम्बरीभिस्समिद्भिर्द्दध्यक्षतमयुतं जुहुयाद्गृहेऽन्नमक्षय्यं भवति ३ सप्ततऽ इत्याहुतिसहस्रेण तेजस्वी भवत्युदुम्बरापामार्गतिलतण्डुलै सप्तदशसहस्राणि जुहुयात्सप्तसुवर्णं लभेत्सर्वकाप्निकी या ज्रृक् सकृदुदुम्बरपात्रेण पूर्णाहुतिहोमेन यं लभते महावाते श्रुक्रज्योतिरिति सप्तवारं जपेच्छान्तिर्भवति इन्द्रं दैवीरिति जातिकलिकानां सुरभिचन्दनाक्तानां घृतपूर्णानां चतुष्पथेशूच्यायतनेऽग्निमुपसमाधाय शतसहस्रं जुहुयात्सर्वालङ्कारभूषितां एव कन्यांल्लभते ४ इमंस्तनमिति समुद्गां नदींग वोदकमवतीर्यायुतं जप्त्वाऽष्टसहस्रं जुहुयाद्ग्रामंलभते घृतधारयाऽर्कपुष्पाणि वा सुप्रविश्य अयुतं जुहुयादुदुम्बरपत्राणां सवत्सां गां लभते जपेद्धेनुं लभते घृतं मिमिक्षऽ इत्येकादशभिराज्याहुतिसहस्रं जुहुयादप्सु प्रविश्य जपेद्गोभयं न भवति वाजश्चेति सप्तभिः पावमानैराज्यं जुहुयादप्सु जपेदक्षिरोगो नश्यति पशुकामस्यैवं ब्रीहयश्चेति सर्वव्रीहीन्पयसा शतसहस्रं जुहुयाद्ग्राम्यब्रीहयोऽक्षय्या

भवन्ति च पुष्णाति ५ विश्वेऽअद्येति महाव्याहृतिवत्कर्मवाजो नऽ इति त्रिभिर्व्रीहीञ्जुहुयादयाचितेन धनमाप्नोति सम्मेति पयोदधिमधुघृतमिश्रान्सर्वब्रीहीञ्जुहुयाद्वर्षति ६ ऋताषाडिति षड्टचेनाज्ज्याहुतिसहस्रं जुहुयाद्वर्षति स नो भुवनस्येति गृहवास्तुभ्यऽआज्याहुतिसहस्रं जुहुयाद्वास्तुदोषैर्न लिप्यते यास्तऽ इति सौभाग्यकामो जपेद्वटप्रशोहसमिद्भिः पुत्रकामो दिवो मूर्द्धेति महाव्याहृतिवत्कर्म मूर्द्धन्नित्यप्स्वहोरात्रं प्रविश्य जपेदहोरात्रं वर्षतोदर्ढ० हविरित्यात्मन्स्त्वो जोबलवृद्धे पयसा होमऽ इन्द्रयविकलो जपेत्पूर्णेन्द्रियो दीर्घायुः प्रजावांश्च स्यादग्नऽआयूंषीत्याज्यं हुत्वा शत्रुगृहे प्रविश्य जपेन्मित्रमिवोपचर्यतेऽपांफेनेनेति जपकामो लाजाञ्जुहुयादाज्यं वा यो भूतानां त्रातारमिति च महाव्याहृतिवत्कर्म महीमूषु तृचेन नावमारोहेत्क्षेमेण तरति ७ हिरण्यपाणिमूतयऽ इत्यर्क्कसमिद्भिरयुतं जुहुयात्सुवर्णमुत्पादयतेऽजीजनऽ इति रहस्यो मन्त्रऽ एतेन नागा वशमुपयान्ति लौहं त्रिशूलर्ढ० सहस्राभिमन्त्रितं कृत्वा दक्षिणपादेनाक्रम्य पयोदधिमधुघृतैरयुतं हुत्वा विकृतरूपास्त्रियऽ उत्तिष्ठन्ति किमस्माभिः कर्तव्यमिति ब्रुवन्त्योऽभिरुचिकामेन ताऽआज्ञापयेत् नमोऽस्तु सर्पेभ्यऽ इति तिसृभिरर्घं दद्यादग्न्यागारे गोमयलिङ्गं प्रतिष्ठाप्य पञ्चगव्येन संस्नाप्य दक्षिणतः शूलं निखनेत्पुनः सहस्रं जपेत्सुवर्णशतंल्लभेत्सिद्धं कर्मेत्याचक्षते वृष्टौ शिखण्डानतसीपुष्पाणि वा युञ्जन्तीति महाभये जपेदभयं भवति सर्वकर्म्मसु मध्ये कृच्छ्रेण गायत्र्या शतसहस्रं जपेत्पूर्वमेवैतत् ८ गणानां त्वेत्यौदुम्बरतिलयवापामार्गधान्यादिहोमार्थप्रदश्चतुष्पथे वैतद्वशीकरणे पिचुमन्दपत्रैर्हुत्वा त्र्यम्बकप्रतिकृतिं वल्मीकमृदा कृत्वाऽर्च्चयेन्मार्ठ०समाषोदनमपूपतिलपिष्टकपरमान्नफलपुष्पा-दिभिर्वलिमुपहरेद्वक्रतुण्डस्यैतानि कर्म्माणि भवन्ति सर्वसमृद्धः स्याद्गायत्री त्रिष्टुविति पञ्चभिः शङ्खेनाज्याहुतिसहस्रं होमात्सिद्धिः ॥ महानाम्न्यऽ इति खातिरस्रुचा तिलतैलं निष्कृष्याऽष्टसहस्रं जुहुयाद्बधबन्धान्मुच्यते वैकङ्कतकण्टककटुतैलविषरुधिराक्तानां द्विगुणं शतसहस्रं हुत्वा सगर्णर्ठ० राजानमुत्सादयति ९ अथ वशीकर्तुमिछन् शिखां परिजप्य विल्वकण्टकान्हुत्वा

राज्ञो मन्त्रभेदं जनयेत्सर्वत्र मध्यमकृच्छ्रो गायत्र्या लक्षं वेन्द्रस्य क्रोडऽ इत्युदरमभिमन्त्र्य रात्रौ स्वपेदुदरविकारो न स्याद्विधृतिमित्याज्ज्याष्टसहस्रं भूमिलाभाय जुहुयाज्जुम्बकायेति वरुणकृदपोमन्त्रोऽश्वमेधावभृथैर्य्युक्तो ब्रह्महत्त्यायाः प्रमुच्यते सकृदन्तर्ज्जले जप्तः संवत्सरकृतंस्तेयमतिहरत्यानो भद्राऽ इत्यनुवाकर्टं० सततं जपेदायुष्मान्भवति भद्रं कर्णेभिरिति जपेत्पूर्णेन्द्रियो दीर्घायुश्च यदूवध्यमिति जप्त्वा नावसीदति नावसीदति १०

इति यजुर्विधाने चतुर्थोऽध्यायः ४

अग्निश्चेत्यवश्यं जपेत्वशमानयति सकामानिति परेण व्यवहारे जपेत्सिद्धिर्होमादक्षय्यौ तुल्यौ ॥ यथेमामिति क्षिप्रं कर्माम्भे सिद्धिः प्रियो देवानामिति महाव्याहृतिवत्कर्म्म ॥ बृहस्पतेऽअतीति धनाय जपेदग्निरृषिति तिलान् अयुतं स्रुवेणोद्यम्य गार्हस्थ्यं न क्षीयते धान्यमक्षय्यं स्यात्समास्त्वेति नवर्च्चेन पायसाहुतीनामयुतं जुहुयाद्गोष्ठमध्येऽग्निमुपसमाधाय गोमयेनादीप्य यावतीमिच्छति तावतीं हुत्वा मणिपिता धेनुर्लभते १ समास्त्वेत्वन्वहं ज्वलितमग्निमभिष्टुयात्त्समिद्धं ततोऽन्यत्रापि शत्रवो विद्रवन्ति सञ्चेति वैकङ्कतीभिर्यशोदधिमधुघृतैः सौभाग्यं त्वामग्नऽ इति तुषकण्टकैः शत्रुनाशअयुतमाज्येत जपऽ इहैवेत्यन्नाज्येन हुत्वा श्रियं विन्दति क्षत्रेणेति जयायाज्यं हुत्वा नामग्राहमतिनिहऽ इत्यग्निमुपहताच्चिर्चः परैरवरुद्धोऽनवरुद्धः स्यादनाधृष्यऽ इत्यग्निं प्रज्वाल्योल्कामण्डलं बध्वा भयं नाशयति बृहस्पते सवितरिति दधिमधुघृतैर्हुत्वा सुभगः स्यात्कन्यादानसमये१००००जपेद्यावज्जीवं सौभाग्यं भवत्यऽमुतभूयादित्यायुः कामो दूर्वानभिशस्ततुषाञ्जुहुयात् २ ऊर्ध्वाऽअस्येति वैकङ्कताभिः शत्रुभयं नश्यति जातीकण्टकैर्वचनविधेयश्च तनूनपादसुरऽ इति न्यग्रोधमूलेऽग्निमुपसमाधायाशोकपुष्पाणां घृताक्तानां शतसहस्रं हुत्वाऽसुरकन्यां पश्यति दृष्ट्वाऽनुवाकशेषे न दद्यादग्निमुखे दिव्यर्टं० सुवर्णं प्रयच्छति न चेत्तूष्णीमनुगच्छेद्भयान्निवर्तते बिलप्रवेशनकाले पाणौ गृहीत्५वा प्रविशति त्रिरात्रोषितस्तत्स्वामी भवति राये न्वित्यनुवाकशेषं निवाते जपेद्वातो वात्येकया च तिसृभिर्घृतं जुहुयाद्वातरोगान्मुच्यते ३अभित्वेत्यप्स्वहोरात्रं

जपेद्वर्षति कया नऽ इति माषोदनं तिलमिश्राणामन्नानां त्रिकटुकेनाभ्यज्य चतुष्पथे शून्यायतनेऽग्निमुपसमाधाय शतसहस्रं जुहुयाद्धोमान्ते चित्राङ्गदो विद्याधरराजो दिव्यर्टं॰सुवर्णराशिं ददाति ४ ऊर्ज्जोनपातमिति दधिमधुघृतैरापभ्द्यो मुच्यते ॥ संव्वत्सरोऽमीत्याज्यमष्टसहस्रं हुत्वा यावज्जीवमारोग्यं स्यात्प्रेत्याऽ इति मधुतिलाञ्छतसहस्रं जुहुयात्सुवर्णमुत्पद्यते न च कश्चिदभिहर्ता भवति ५ केतुं कृण्वन्नित्यनुवाकेन रथं शस्त्रमायुधमात्मानं चाभिमन्त्र्य सङ्ग्रामे प्रविश्य जपेज्जयो भवति धन्वनागेति धनुर्वेदमन्त्रः स्वाध्यायाद्यावद्रणदीक्षितः क्षत्रियो भवति सा च दीक्षा त्रिविधा गोब्राह्मणदेवस्याम्यात्मनां हितायेत्यात्मानं सन्नह्यतऽ इति मर्माणितऽ इति कवचं परिधत्ते धन्वनेति धनुर्योजयेतेऽआचरन्ती इतिविस्फुरणं वक्ष्यन्ती व्वेदिति ज्याभिमर्शनमहिरिवेति हस्तवेष्टनमभिमन्त्रयते वह्नीनां पितेति तूणं कलाममभिमन्त्र्य परिधत्ते सुपर्णमिति नैरृत्यां दिश्येकमिषुं क्षिपेदपऽ उपस्पृश्य वनस्पते वीड्वकऽ इति रथमालभ्य युंजन्तीत्यश्वयोजनमसि यमऽ इतिबन्धनमाशुः शिशानऽ इत्यनुवाकेनालभ्य विष्णोः क्रमऽ इत्यारुह्याजङ्घन्तीत्यश्वताडनमक्रन्ददिदित्युत्सर्जमाने जपेद्याः सेनाऽ इति परसैन्याभिमुखर्ठं॰ रथं बाहयेद्रथे तिष्ठन्तित्यवस्थापयेत्सदुग्दुभऽ इति दुन्दुभिस्ताडनमहिरिवेतीषुं गृह्णाति यत्र वाणाऽ इति दिक्ष नयेद्यदक्रन्दऽ इति रथं वाहयेत्तदेवमाविड्व्याविध्य शस्त्राणां चालनमेव युध्यमानेऽपराजितो भवति शक्रेणापि युध्येत् ६ यमेन दत्तमित्यश्वानभिमन्त्रयेच्छ्रान्तान्पुनस्त्रीणितऽ इत्यश्वग्रन्थीन्मोचयेन्माहांरऽ ॥ इन्द्रऽ इत्यासनमिन्द्रो वृत्रमिति रथं कुतस्त्वमिति योधात्सहसामभिभाषयेत्तान्प्रतिजपेत्सुसमिद्धायेत्याहवनीये समिधमादधाति न तद्रक्षांसीत्याज्याहुतीनामयुतं जुहुयात्क्षत्रियाणां क्षत्रत्राणाय गतायुरपि दीर्घायुर्भवति शं नो देवीरित्युपस्थाय प्रविशेदेषा रणदीक्षा ब्राह्मणोऽपि प्राणसर्ठं॰ण्ये शस्त्रपाददीत यमेन दत्तमित्यश्वं सकृदाज्याहुतीनामयुतं जुहुयाच्चतुरश्वयुक्तर्ठं॰ रथं लभतेऽसियमऽ इति मधुतिलाञ्जुहुयाद्देवमनुलेपनादिभिरर्चयेद्द्विपापो भवति ब्रह्मघ्नमपि लक्षहोमेन तारयेत्समिद्धोऽअद्येति होमकाले देवतानामाह्वानमग्नये गायत्रायेति

सार्वकामिकं चरुं कुर्यात् ७ विश्वानिदेवेति महाव्याहृतिवदादित्यमुदयऽ उपतिष्ठेद्विपापो भवत्युदकसक्त्वाहारो मासमेकमन्वहर्ठ० सहस्रं जपेद्ब्रह्महत्यादेरपि मुच्यते विभक्तारमिति सप्तम्यां कुशपुष्पमालां कृत्वौदुम्बरसमिधो यावच्छुष्यति यावत्पुष्पारायार्द्रकेशस्य साहस्रिकं कर्म महानर्थो जायते गोशफेनाज्ज्याहुतिहोमो गोकामाय मध्यान्हान्नपिडंतहस्राभिमन्त्रितं निवेदयेदक्षय्यमन्नं स्याद्वने वुभुक्षित आदित्याभिमुखो जपेत्सर्वतो भोजनं लभते ८ सहस्रशीर्षेति महाव्याहृतिवद्वेदाहमित्याप्सु प्रविश्याहोरात्रं जपेदामध्यान्हाद्वर्षति यो देवेभ्यऽ इति रुचमिति रोचनाम्न्या महाव्याहृतिवच्छ्रीश्चेति कुमुदप्तौगन्धिकोत्पलान्युप्य हुत्वा श्रीमान्भवत्युत्तरनारायणेनादित्योपस्थानं कामं नामग्रहणं च यथेष्टं कामर्ठ० सर्वत्र कर्म सदसस्पतिमिति चन्द्रग्रहे निराहारो वाचां ब्राह्मीं वा सहस्राभिमन्त्रितां पिबेत्परममेधावी स्याद्यां मेधामिति जपेदिदं मऽ इति च श्रीकामो नित्वम् ९ अस्याजरासऽ इत्यग्निमुपतिष्ठेद्वरदो भवति तेजस्वीव द्वयोर्महाव्याहृतिवत् त्रीणि शताऽग्नेशर्द्वेति त्रिमधुरैः सौभाग्यं प्रवो महेऽ इति भूमिकामस्तिलतण्डुलैरिन्द्रो वृत्रमित्यत्रपुष्प्याऽआयुषऽआज्यमाहुतऽ इत्यौदुवरीभिर्द्धनकामो विभ्राडित्यनुवाकर्ठ० सततं जपेत्प्रजाकामस्तेजस्वी निरुजश्चानऽ इडाभिरित्यौदुम्बरीभिः पशुकामो यदद्येति वासकादिभिर्वशीकरणं तिलकेन तसूर्यस्येति चक्षुष्मान्भवति वरामहानिति महाव्याहृतिवच्छ्रायन्तऽ इवेति तिलान्पुष्पाणि वा हुत्वा वास्तुपे शतपुष्पीं वा सुभगः स्यात् १० आकृष्णेनेति महाव्याहृतिवत्कर्म करवीरपुष्पाणि १००००० हुत्वा तप्त सुवर्णं लभेद् दरिद्रश्चेन्नवायूऽ इन्द्राग्नी मित्रावरुणेति देवाताह्वानं सिद्धयेऽग्नऽ इन्द्रास्मे रुद्राऽ इति वारुण्यां गच्छेत्त्क्षेमं भवत्यर्वाञ्चऽ इति घृतेन सर्वभयनाशनं मित्त्रर्ठ० हुवऽ इति घृतर्ठ० हुत्वा शिष्टं पिबेन्मेधावी स्याददब्देभिरिति लानाभिर्हितण्यं गावऽ उपेति दधिमधुघृतैः पशुपुत्रसमृद्धिकामऽ उपनोऽनुत्तमेति चेमाऽ उ त्वेति पावकाय प्रतिकर्मास्याजरासऽ इत्यध्यायेन सर्वदेवताराधनं कुर्यात्प्रतिदिनं काममेकैकं लभतेऽध्ययनेन मासात् ११ यज्जाग्रतः षड्भिः शिवसङ्कल्प्पेन

मानससमाधिः पितुन्न्विति शत्रुनामग्राह्ययाभिचाराणि जुहुयात्कर्म षट्कं सिद्ध्यन् म्रियते पञ्च नद्यऽ इति पद्मपुष्पाणि रक्तचन्दनघृताक्तानि लक्षं हुत्वा साक्षात्पद्ममालिनीं पश्यति यावज्जीवं धनं प्रयच्छतीष्टसमृद्धिं च सिनोवालीति प्रजाकामोऽन्नं जुहुयात् अन्वदित्य युष्ये वटारोहौदुम्बरदूर्वाश्च त्वन्नऽ इति पुत्रपशुरक्षार्थमाज्यं जुहुयादुत्तानामवेति सद्योजातमात्रवत्सावलीढायां वा जिह्वां उपस्पृशेद्गावऽअक्षय्या भवन्ति। इडायास्त्वेति गोशफेनाज्याहुतिसहस्रं जुहुयात् धेनुशतं ल्लभते। त्वमग्ग्ने प्रथमऽ इति नित्यमग्निं सुनुयात्सर्वसमृद्धो भवति प्रवो महऽ इति षड्चेन पितृनर्च्चयेत्प्रजाकामऽआहुतिसहस्रं जुहुयात् गोशतं लभते देवेनेति यद्धनमिच्छेत्तावन्ति सव्रीहीञ्जुहुयात्प्रभुत्वं लभते सोभो धेनुमिति सोमचन्द्रग्रहेऽनुदितमुपतिष्ठेत्तन्मासे क्षेमसौदुम्बरीभिर्हुत्वा हिरण्यप्राप्तिः स्यादष्टौ वीति महाव्याहृति यद्धिरण्यपानिरिति चाभिचारवर्ज्जमादित्योपस्थानर्ठ० हिरण्यहस्तऽ इति सर्षपानभिमन्त्र्य रक्षार्थो भवति ये ते पन्थाः क्षेमेण गच्छति क्षेमकारिण्युभा पिबतमिति रूपकामोऽश्विनौ स्तुयादुषस्तदिति प्रातर्दिवा स्वस्त्ययनमनाद्यं च पुत्रार्थी द्रव्यहोमस्तदर्थं महाव्याहृतिवत्प्रातर्ज्जितमिति च यदा बध्नन्निति हिरण्यर्ठ० सखाभिमन्त्रितं दक्षिणहस्ते बध्नीयात्सर्वेषां पापचक्षुषां दृष्टिदोषमपोहति न च राजाविरुहमाचरेत्प्रियदर्शनो भवति १२

इति यजुर्विधाने पञ्चमोऽध्यायः ५

परं मृत्यविति बालानां गुर्विणीनां हस्ते सूत्रबन्धो भूतप्रेतादि नाशयति जपहोमौ च प्रौढगर्भे गर्भस्रावे बन्ध्यात्वे च मृतवत्सामृतौ मार्ठसपललापूपजाङ्गलिकारण्यमांसपयोदधिमधुवृताक्तमन्नं निवेद्य सर्वकामिकमन्नर्ठ० हुत्वा शेषभुग्जप्त्वा मैथुनमुपेयाद्गर्भस्तिष्ठति प्रथमे पतिते आवाहनं द्वितीये पोषणं तृतीये तर्पणं पञ्चमे गर्भस्तिष्ठेदमोघं कर्मापाघमित्यपामार्गहोमः सर्वदुरितदुःस्वप्ननाशनऽआयुष्मानित्याज्यमायुषे रक्षायाऽ इमं जीवेभ्यऽ इति सीतालोष्टर्ठ० सहस्राभिमन्त्रितं चतुर्द्दिक्षु क्षिपेद्दुष्टभयं न स्यात्परीमऽ इति शिखाबन्धौ मंडलबन्धश्चात्मरक्षार्थाय

वशीकरणे तुषहोमो महाभये जपेदभयं भवति राजानमीक्ष्य जपेद्वश्यो भवति हन्तुमागच्छन्तं दृष्ट्वा जपेत्प्रणमति भक्षपुष्पफलादीनि दद्याद्वश्यार्थे च स्योना पृथिवीति महाव्याहृतिवत्कर्म्म १ ऋचं वाचमितीन्द्रियविकलो जपेत्पूर्णेन्द्रियो भवति यन्मऽ इति कर्मसमाप्तौ दोषपरिहारार्थञ्जपेत् इन्द्रो विश्वस्येति द्विपदचतुष्पदां शान्तिः क्षीरहोमाच्छान्तिर्भवति शन्नो मित्रऽ इति जनमरणे चोपसर्गाभिचारेषु ज्वरादिरोगे स्वाध्यायसमाप्तौ व्रीहिहोमः शान्त्ये विषमग्रहे तत्समिद्धोमः द्यौः शान्तिरित्यभिचारवर्ज्जं सर्वकर्मसिद्धर्यतो यतऽ इति जपेदभयकारिणीं सुमित्रिया नऽ इति जलमञ्जलिनादाय दुर्भित्रियाऽ इति द्वेष्यं प्रतिनिक्षिपेत्तमुत्सादयति तच्चक्षुरिति जपेदारोग्याय पुष्ट्यै १२ यमाय त्वा जपेदन्वहर्ठ० सर्वसमृद्धो विदितश्च स्यात् २ अनाधृष्टेति पञ्चचतुर्भिः पयोदधिघृतमधुतिलैर्ज्जुहुयाद्यथासङ्ख्यमायुः प्रजापुष्टिधनतेजस्कामो विग्यऽ इति निमित्ते जपेद्धर्त्ता दिवऽ इति बुद्धिभ्रंशनाशनी हृदे त्वेते मतो ग्लानौ कर्मसमृद्धिः पिता नऽ इति महाव्याहृतिवत् ३ इडऽ एहीति यामेव धेनुच्छित्तस्या नाम परिजप्य गोस्वामीति शब्दं वदेत्तस्यैवापतति गोमयेन गोः प्रतिकृतिं कृत्वा तन्नाम्ना बध्वा सव्येन गृहीत्वा पयोदधिमधुघृतं जुहुयात्तामेव धेनुं लभते यस्ते स्तनऽ इति सर्वकर्माणि सिद्ध्यन्ति स्वाहा सूर्यस्येति वृष्टिकामः पयो जुहुयात्सद्यो वर्षति समुद्रायेति वातनामानि जपेद्वातो वाति दिविधाऽ इति दधिसहस्रं हुत्वासविता प्रसीदति व्रीह्यादिभिः पुष्टिर्वारणैर्वृष्टिर्वेतप्तगुडक्षीरैस्तैलाक्ताभिः सहस्रं जुहुयात् स्वाहा रुद्रायेति रहस्यो मन्त्रः गवेधुकतण्डुलान् जुहुयाद्धनकामः ४ स्वाहा प्राणेभ्यऽ इति महाव्याहृतिवत्कर्म तं ग्रामे कुर्यान्मनसः काममिति श्रीनाम्ना सर्वाभ्युदयसिद्धः फलति गोशफेनाज्यहो १००० मेन गोलाभो गोमयहोमेन सिद्धिरुग्रश्चेति विमुखाख्यो मन्त्रः सर्वकामप्रदो गोपशुमरणे गोष्टे वैकङ् १०००० कतीर्हुत्वा शान्तिः रुग्रंलोहितेनेत्येकादशयजुर्भिर्द्द्रव्यकामवर्ज्जं महाव्याहृतिवत्प्रतिदिनमेकादशचरून्प्रतिमन्त्रं निर्वपेदेकादशैव धेनवऽ उत्पद्यन्तऽएवमन्येष्वपि कामेषु हुत्वाऽध्यायशेषेणादित्यमुपतिष्ठेत्तेनास्य कर्मणां पहलमाप्रोत्यग्नेनयेति नमस्कारोक्तरग्निस्तुतिरात्मनो वा कर्मसमाप्तौ

समाधौ च हिररामयेनादित्योपस्थानमोमित्येकाक्षरस्य परब्रह्मणो नामधेयं वेदोरम्भे समाप्तौ च जपहोमादिषु शान्तिपुष्तिकर्म चैतत्प्रयुज्ज्यतऽ एतद्विदित्वा सर्वविद्भवत्येतदुपास्य रविसिद्धिभाग्भवति कल्याणतरो भवत्येतत्कर्मफलप्रतिपादकं पूर्वकर्मफलाभावादभावकृतस्य कर्मणः स वेदफलयुक्तस्य कर्मणो नास्ति नैव फलमिति तच्छक्त्यपेक्षयाऽमुष्मिंल्लोके कृतस्य कर्मणः फलठ० हि सं पत्तिः प्रत्ययं च न च विद्याधरपादप्रसारितधनानां जनपूर्ववर्णरसेषु नास्ति यज्ञविरोधित्वादित्यनेनैव प्रकारेण सर्वे मन्त्राः प्रकीर्तिता ये नोक्तास्ते च सर्वे यशस्कराऽअथ वा सर्वमन्त्राणां विस्तरेण पृथम्बिधानं विस्तरेण पृथग्विधानमिति ५

इति श्रीयजुर्वेदवाजसनेयसंहितायजुर्विधाने षष्ठोऽध्यायः ६

समाप्तोऽयम्

इति यजुर्विधानशिक्षा